SAMVARDHINI
PEER REVIEWED MULTILINGUAL E-RESEARCH JOURNAL
(ISSN ONLINE: - 2583-7176)
https://samvardhini.in
https://samskritpromotion.in

**SAMVARDHINI:** - 20/12/2023
**Volume** - 5
**Issue** - 2
(ISSN ONLINE: - 2583-7176)
https://samvardhini.in



# कुट्टकगणितद्वारा रविमन्दोच्चभगणोपपत्तिप्रदर्शनम्

**लेखकः**
**गिरीशभट्टः बि**

**गिरीशभट्टः बि**
सिद्धान्तज्यौतिषशास्त्रे विद्यावारिधिः
(Ph.D.) शोधच्छात्रः,
ज्यौतिष–वास्तुविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः (आन्ध्रप्रदेशः)
bhatgirish1997@gmail.com

**शोधसारः -**

हेतुवादपुरस्सरं वस्तुस्थापनमेव उपपत्तिः । इह गणितस्कन्धे उपपत्तिमानेव आगमः प्रमाणम् । अतः उपपत्त्या ये भगणाः सिद्ध्यन्ति ते एव ग्राह्याः । रविचन्द्रादीनां ग्रहाणाम् भगणान् वयं वेधद्वारा एव उपपादयितुं शक्नुमः । किन्तु मन्दोच्चादीनां तु अनेकैः वर्षशतैः एको भगणः पूर्यते । मनुष्यस्य आयुः अधिकाधिकं शतवर्षमितं वा ततोऽपि किञ्चिदधिकं वा भवितुमर्हति । अत एव मन्दोच्चादीनां भगणानां वेधं कर्तुं मनुष्येण न शक्यते । अतः मन्दोच्चादीनां भगणोपपत्तिप्रदर्शनार्थं कुट्टकविधिः गणकैः आश्रितः । सिद्धान्तशिरोमणिग्रन्थे ग्रहगणिताध्याये मध्यमाधिकारे कालमानाध्याये भास्कराचार्येण कुट्टकगणितद्वारा रविमन्दोच्चभगणोपपत्तिं कथं प्रदर्शयितुं शक्यते इति प्रतिपादितमस्ति । तं च क्रमं गणितरूपेण शोधपत्रेऽस्मिन् निरूप्यते ।

**कूटशब्दाः** – कुट्टकः, भगणः, मन्दोच्चम्, उपपत्तिः, आगमः ।

**कुट्टकगणितस्य परिचयः** –

$$ax + by = c$$

इत्यस्मिन् प्रथमस्तरीयसमीकरणे a, b, c इत्येते स्थिरपूर्णाङ्काः (constant integers) भवेयुः । एवञ्च x, y अज्ञातचरसङ्ख्ये भवेताम् । अत्र एतादृशानां समीकरणानां बहवः परिहाराः भवितुमर्हन्ति । अतः एतानि समीकरणानि "**प्रथमस्तरीयाणि अनिर्दिष्टसमीकरणानि (intermediate equations of the first degree)**" इत्युच्यन्ते । एतादृशानां प्रथमस्तरीयाणाम् अनिर्दिष्टसमीकरणानां परिहारार्थम् आर्यभट-ब्रह्मगुप्त-भास्कराचार्यादिभिः भारतीयगणितज्ञैः "कुट्टकः" इति कश्चन विशिष्टः प्रकारः गवेषितोऽस्ति । तेषाम् आचार्याणां ग्रन्थेषु कुट्टकगणितस्य नियमाः प्रतिपादितास्सन्ति ।

अभीष्टः कश्चन अङ्कः येन गुणकविशेषण गुणितः अभीष्टक्षेपेण सहितः अभीष्टभाजकेन भक्तः चेत् निःशेषः भवति सः गुणकविशेषः एव 'कुट्टकः' पदेन व्यपदिश्यते । एतादृशगुणकविशेषस्य अन्वेषणार्थं यः गणितविधिः निरूपितः सः 'कुट्टकगणितम्' इति लोके प्रसिद्धः । कुट्टकगणितार्थं सम्भवे सति भाज्यो हारः क्षेपकश्च केनापि अपवर्तनाङ्केन अपवर्त्यः । कुट्टकप्रश्नस्य स्वरूपम् अधोनिर्दिष्टरीत्या भवति –

$$\frac{(\text{भाज्यः} \times ?) + \text{क्षेपकः}}{\text{हारः}} = \text{लब्धिः}$$

सति सम्भवे त्रयाणां भाज्यहारकक्षेपाणाम् अपवर्तनं कुर्यात् । अत्र येन अङ्केन भाज्यहारौ छिन्नौ भवतस्तेनैव क्षेपः न छिन्नश्चेत् प्रदत्तं कुट्टकगणितोदाहरणम् असमीचीनमिति ज्ञेयम् ।

कुट्टकगणितस्य ग्रहगणिते महानुपयोगः वर्तते । यथोक्तं भास्कराचार्येण बीजगणिते कुट्टकप्रकरणे –

**कल्प्याऽथ शुद्धिर्विकलावशेषं षष्टिश्च भाज्यः कुदिनानि हारः ।**
**तज्जं फलं स्युर्विकला गुणस्तु लिप्ताग्रमस्माच्च कला लवाग्रम् ॥**
**एवं तदूर्ध्वं च तथाऽधिमासावमाग्रकाभ्यां दिवसा रवीन्द्वोः ॥**[1] इति ।

भगणादिग्रहानयने यद्विकलावशेषं विद्यते तत्तु शुद्धिः ऋणक्षेपत्वेन कल्प्यः । षष्टिः भाज्यः । कुदिनानि तु हारत्वेन कल्प्यानि । इत्थं भाज्यक्षेपहारान् प्रकल्प्य कुट्टकगणितेन गुणलब्धी साध्ये । तज्जं फलं (लब्धिः) विकलाः, गुणकस्तु कलावशेषः भवति । अस्मात् कलावशेषात् पुनः पूर्ववत् गुणलब्धी साधनीये । तदानीं लब्धिः कलाः भवन्ति । एवं तदूर्ध्वं कला-लव-राशि-भगण-अहर्गणाद्यं साध्यम् । एवमेव अधिमासशेषेण गतरविदिवसाः, अवमशेषेण गतचान्द्रदिवसाः अपि कुट्टकगणितेन सिध्यन्ति ।

एवं ग्रहगणिते अस्य कुट्टकगणितस्य एकः अन्वयः वर्तते ग्रहाणां मन्दोच्चभगणानाम् उपपत्तिप्रदर्शनसन्दर्भे । शोधपत्रेऽस्मिन् कुट्टकगणितद्वारा रविमन्दोच्चस्य कल्पभगणसङ्ख्यायाः आनयनस्य प्रयासः कृतः ।

**कुट्टकगणितद्वारा रविमन्दोच्च (रवितुङ्ग) भगणोपपत्तिप्रदर्शनम्** –

मिथुनस्थे रवौ कस्मिंश्चिद्दिने रेवतीतारकोदयात् यावतीभिः घटिकाभिः रविः उदितः तावतीभिः घटिकाभिः इष्टकालं प्रकल्प्य मीनान्तात् उदयलग्नं (लग्नं) साध्यम् । इत्थम् अत्र यः लग्नस्फुटः लभ्यते स एव स्फुटः रविः इति ज्ञेयः । एवमेव द्वितीयेऽपि दिवसे लग्नं संसाध्य रविस्फुटः ज्ञेयः । तयोः रविस्फुटयोरन्तरमेव तद्दिने रवेः स्पष्टा दिनगतिर्भवति । एवं प्रकारेण प्रत्यहं रवेः

[1] भास्करीयबीजगणितम् (कुट्टकगणितम्) – श्लोकः ६७ (वेणुगोपालहेरूरमहोदयानाम् आङ्ग्लव्याख्यानयुक्तग्रन्थस्यानुसारेण अत्र श्लोकसङ्ख्या दत्ता ।)

स्फुटदिनगतयः ज्ञातव्याः। यस्मिन् दिने गतेः परमाल्पत्वं दृश्यते तद्दिने यावान् रविः भवति तावदेव रवेः उच्चं भवति। रवेः शीघ्रोच्चाभावात् अत्र उच्चं नाम रविमन्दोच्चमिति ज्ञेयम्। तच्च रविमन्दोच्चम् अतीव मन्देन चलति। तस्य रविमन्दोच्चस्य चलनं वर्षशतेनापि नोपलक्ष्यते। किन्तु एतत् आचार्यैः चन्द्रमन्दोच्चवत् अनुमानात् कल्पिता गतिर्भवति। सा चैवम्। यैः भगणैः साम्प्रताहर्गणात् वर्षगणाद्वा एतावदुच्चं भवति ते भगणाः युक्त्या कुट्टकेन वा कल्पिताः।

एवं रविमन्दोच्चस्य गतेः परमाल्पत्वात् वेधेन रविमन्दोच्चभगणान् आनेतुं न शक्यते। अतः कुट्टकगणितमाश्रित्यैव रविमन्दोच्चभगणाः आनेतव्याः। अत्र बापूदेवशास्त्रिमहोदयैः रविमन्दोच्चस्य स्वल्पान्तरत्वात् अष्टसप्तत्यद्रिभागमितस्य (७८°) उपलब्धौ कुट्टकयुक्त्या यद् भगणानयनं कृतं तदेवात्र विस्तरेण प्रदर्श्यते –

अत्र १७८८ तमे शालिवाहनशकवर्षे कुट्टकयुक्त्या रविमन्दोच्चभगणोपपत्तिर्निरूपिता। एकस्मिन् कल्पे रविमन्दोच्चभगणाः खाष्टाब्धिमिताः = ४८० मिताः भवन्ति इति सिद्धान्तशिरोमणिग्रन्थे भास्कराचार्येण कथितम्। किन्तु कल्परविमन्दोच्चभगणाः एतावन्त वा न वा इति वयं न जानीमः। अतः ते भगणाः गणितेनास्माभिः साधनीयाः। एतदर्थं कल्परविमन्दोच्चभगणाः "या" इति अस्माभिः कल्प्यन्ते।

कल्पसौरवर्षाणि = ४३२०००००० वर्षाणि।

वर्तमानशालिवाहनशकवर्षसङ्ख्या = १७८८

गतशालिवाहनशकवर्षाणि = १७८८ – १ = १७८७

शकनृपान्ते = शालिवाहनशकवर्षारम्भे कल्पादितः गतसौरवर्षाणि = गोद्रीन्द्वद्रिकृताङ्कदस्रनगगोचन्द्राः
= १९७२९४७१७९ वर्षाणि।

शकनृपान्ते कल्पगतसौरवर्षाणि + गतशालिवाहनशकवर्षाणि
= १७८८ तमशालिवाहनशकवर्षपर्यन्तं कल्पादितः गतसौरवर्षाणि

अर्थात्, १९७२९४७१७९ + १७८७ = १९७२९४८९६६ वर्षाणि
= १७८८ तमशालिवाहनशकवर्षपर्यन्तं कल्पादितः गतसौरवर्षाणि

१७८८ तमे शालिवाहनशकवर्षे रविमन्दोच्चस्य स्थितिः = २<sup>s</sup>१८° = ७८°

१ भगणः = १२ राशयः = ३६०°

अत्र त्रैराशिकं यथा – कल्पसौरवर्षैः कल्परविमन्दोच्चभगणाः लभ्यन्ते चेत् एभिः इष्टवर्षैः किमिति। एवं त्रैराशिकेन लब्धं फलं गतरविमन्दोच्चभगणाः भवन्ति। ते च गतरविमन्दोच्चभगणाः "का" इति कल्प्याः।

कल्पसौरवर्षाणि -------- कल्परविमन्दोच्चभगणाः

कल्पादितः गतसौरवर्षाणि ------- ?

अस्य त्रैराशिकस्य समीकरणस्वरूपम् अधोनिर्दिष्टरीत्या भवति –

$$\frac{\text{कल्पादितः गतसौरवर्षाणि} \times \text{कल्परविमन्दोच्चभगणाः}}{\text{कल्पसौरवर्षाणि}} = \text{गतरविमन्दोच्चभगणाः} + \text{शेषम्}$$

$$\frac{\text{१९७२९४८९६६} \times \text{या}}{\text{४३२००००००००}} = \text{का} + \text{शेषम्}$$

अर्थात्,

$$\frac{\text{१९७२९४८९६६या}}{\text{४३२००००००००}} = \text{का} + \text{शेषम्}$$

अत्र,

का = गतरविमन्दोच्चभगणाः ।

शेषम् = वर्तमानरविमन्दोच्चभगणे गतराश्यादयः ।

१७८८ तमे शालिवाहनशकवर्षे रविमन्दोच्चस्य स्थितिः क्रान्तिवृत्ते ७८ तमे अंशे आसीत् । अर्थात् १७८८ तमे शाल्वाहनशकवर्षे कल्पादितः रविमन्दोच्चस्य "का" सङ्ख्यकाः भगणाः याताः, वर्तमाने भगणे ३६० अंशेषु ७८ अंशाः याताः इत्यर्थः । अतः,

$$\text{गतरविमन्दोच्चभगणाः} + \text{शेषम्} = \text{गतरविमन्दोच्चभगणाः} + \frac{\text{७८}}{\text{३६०}}$$

$$\therefore (\text{कल्परविभगणाः} \times \text{कल्पादितः गतसौरवर्षाणि}) - (\text{कल्पसौरवर्षाणि} - \text{गतरविभगणाः}) = \text{शेषम्}$$

अर्थात्, $\text{१९७२९४८९६६ या} - \text{४३२०००००००० का} = \frac{\text{७८}}{\text{३६०}}$

समच्छेदीकृत्य छेदगमे –

$$\frac{\text{१९७२९४८९६६ या}}{\text{१}} - \frac{\text{४३२००००००००का}}{\text{१}} = \frac{\text{७८}}{\text{३६०}}$$

$$\therefore \frac{\text{१९७२९४८९६६या} - \text{४३२००००००००का}}{\text{१}} = \frac{\text{७८}}{\text{३६०}}$$

अत्र समीकरणस्य वामपार्श्वे छेदः = १, दक्षिणपार्श्वे च छेदः = ३६० भवति । अतः उभयोरपि पार्श्वयोः समच्छेदसम्पादनार्थम् अनयोः १, ३६० छेदयोः लघुतमसामान्यापवर्त्यं (LCM) साधनीयं भवति । तद्यथा –

| | |
|---|---|
| ३६० | १,<br>३६० |
| १ | १, १ |
| | १, १ |

३६० × १ = ३६० = १, ३६० इत्यनयोः लघुतमसामान्यापवर्त्यम्।

उभयोरपि पक्षयोः लघुतमसामान्यापवर्त्यतुल्यः छेदः समच्छेदः भवति। उभयोरपि पक्षयोः कया सङ्ख्यया छेदे गुणिते सति लघुतमसामान्यापवर्त्यतुल्यः छेदः जायते तया एव सङ्ख्या अंशच्छेदयोः गुणनं कार्यम्। तदानीम् उभौ अपि पक्षौ समच्छेदयुक्तौ भवतः।

$$\frac{(\text{१९७२९४८९६६ या} - \text{४३२००००००० का})\text{३६०}}{\text{१ (३६०)}} = \frac{\text{७८} \times \text{१}}{\text{३६०} \times \text{१}}$$

$$\therefore \frac{\text{७१०२६१६२७७६० या} - \text{१५५५२०००००००००का}}{\text{३६०}} = \frac{\text{७८}}{\text{३६०}}$$

इदानीम् उभयोरपि पक्षयोः छेदयोः साम्यात्तयोर्नाशे कृते सति –

७१०२६१६२७७६० या – १५५५२०००००००० का = ७८°

इति समीकरणं सिद्ध्यति।

$$\text{कल्पसौरवर्षाणि} \times \text{शेषम्} = \text{४३२००००००} \times \text{७८} = \text{३३६९६००००००००}$$

अतः,

$$\text{७१०२६१६२७७६० या} - \text{१५५५२०००००००० का} = \text{३३६९६००००००००}$$

समशोधने कृते सति –

$$\text{७१०२६१६२७७६० या} - \text{३३६९६००००००००} = \text{१५५५२०००००००० का}$$

“७२०” इत्यनया सङ्ख्यया पक्षौ अपवर्तितौ कृतौ –

$$\text{९८६४७४४८३ या} - \text{४६८००००००} = \text{२१६००००००० का}$$

“२२२६८०४” इत्यनया सङ्ख्यया पक्षौ अपवर्तितौ कृतौ –

$$\text{४४३ या} - \text{२१०} = \text{९७० का (स्वल्पान्तरत्वात्)}$$

एतत् समीकरणम् अधोनिर्दिष्टरीत्यापि लेखितुं शक्नुमः –

$$\frac{\text{४४३ या} - \text{२१०}}{\text{९७०}} = \text{का}$$

**अत्र कुट्टकः** –

९७०)४४३(०
०००
४४३)९७०(२
८८६
८४)४४३(५
४२०
२३)८४(३
६९
१५)२३(१
१५
०८)१५(
०८
०७)०८(१
०७
०१

**वल्ली** –

(० × २६६७०) + १२१८० = १२१८० = लब्धिः

(२ × १२१८०) + २३१० = २६६७० = गुणकः ।

(५ × २३१०) + ६३० = १२१८०

(३ × ६३०) + ४२० = २३१०

(१ × ४२०) + २१० = ६३०

(१ × २१०) + २१० = ४२०

(१ × २१०) + ० = २१०

२१०

०

४४३)१२१८०(२७
८८६
३३२०
३१०१
२१९ = लब्धिः

९७०)२६६७०(२७
१९४०
७२७०
६७९०
४८० = गुणकः

अतः,

या = कल्परविमन्दोच्चभगणाः = ४८०

का = गतरविमन्दोच्चभगणाः = २१९ इत्युपपन्नम् ।

**निष्कर्षः** – रविचन्द्रादीनां ग्रहाणां भगणपूर्तिः मानवजीवने लक्ष्यते । अतः तेषां कल्पभगणसङ्ख्याः वा महायुगीयभगणसङ्ख्याः वा वेधद्वारैव आनेतुं शक्यन्ते । किन्तु मन्दोच्चपातादीनां गतिः अतीव मन्दा भवति । नैकशतवर्षेष्वपि तेषाम् एकविकलामितगतिरपि न भवति । अतः तेषां भगणसङ्ख्याज्ञानं वेधद्वारा न भवति । एतदर्थं प्राचीनभारतीयगणकैः मन्दोच्चपातादीनां भगणसङ्ख्यासाधनार्थं कुट्टकविधिः आश्रितः । कुट्टकगणितद्वारा एकस्य एव समीकरणस्य अनिर्दिष्टपरिहाराः भवितुमर्हन्ति । अतः कुट्टकगणितद्वारा एकस्य एव मन्दोच्चस्य पातस्य वा भिन्नभिन्नभगणसङ्ख्याः प्राप्तुं शक्यन्ते । उदाहरणार्थम् अत्र यदा रविमन्दोच्चस्य साम्प्रतिकी स्थितिः क्रान्तिवृत्ते ७८° स्थाने भवति तदानीं रविमन्दोच्चस्य भगणसङ्ख्याः ४८० मिताः इति कुट्टकद्वारा आनीताः । परन्तु कालान्तरे यदा रविमन्दोच्चस्य स्थानं भिद्यते (१५०°, २००° किमपि भवति) तदानीं तदाश्रित्य कुट्टकगणिते कृते सति रविमन्दोच्चस्य भगणसङ्ख्या कदाचित् अन्या एव प्राप्येत । परन्तु भगणसङ्ख्याः कियन्ति वा भवन्तु, भगणसङ्ख्या अस्माकं कृते मुख्या नास्ति । ग्रहगणिते समीचीनरूपेण ग्रहस्फुटादीनां प्राप्तिः अस्माकं कृते मुख्या भवति । अतः यया भगणसङ्ख्यया ग्रहस्फुटादयो समीचीनरीत्या आगच्छन्ति तान् भगणान् स्वीकृत्य ग्रहगणितं कार्यम् इति भारतीयसिद्धान्तकाराणाम् अभिप्रायः ।

## सन्दर्भग्रन्थसूची

1. **“ज्या-सिद्धान्ताः” Formulas of Sine;** सम्पादकः – पं. शिवचरणशास्त्री; प्रकाशनवर्षम् – सा.यु.२०१४; प्रकाशनसंस्था – राष्ट्रियसंस्कृतसाहित्यकेन्द्रम्, जयपुरम्

2. **अर्वाचीनं ज्योतिर्विज्ञानम्;** ग्रन्थकर्ता – श्रीरमानाथसहायः; प्रकाशनवर्षम् – सा.यु.१९९६; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

3. **उपपत्तीन्दुशेखरः;** महामहोपध्यायश्रीदुर्गाप्रसादद्विवेदिना सङ्कलितः, सम्पादकः – श्रीगिरिजाप्रसादद्विवेदी, संस्करणम् – सा.यु.२००८, प्रकाशनसंस्था – भारतीयबुक् कार्पोरेशन् – नवदेहली

4. **ज्योतिर्विज्ञानम्;** ग्रन्थकर्ता – धूलिपाल अर्कसोमयाजी; प्रकाशनवर्षम् – सा.यु.१९६४; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

5. **ज्योतिष-सिद्धान्त-मञ्जूषा;** ग्रन्थकर्ता – डॉ. विनयकुमारपाण्डेयः; संस्करणवर्षम् – सा.यु.२०२०; प्रकाशनसंस्था – चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

6. **पं. बलदेवमिश्रकृता सरलत्रिकोणमितिः;** व्याख्याकारः सम्पादकश्च – डॉ. कमलाकान्तपाण्डेयः; प्रकाशनवर्षम् – सा.यु.२००७; प्रकाशनसंस्था – शारदासंस्कृतसंस्थानम्, वाराणसी

7. **भास्करीयगोलमीमांसा;** प्रधानसम्पादकः – प्रो. वाचस्पति उपाध्यायः, लेखकः – प्रो. देवीप्रसादत्रिपठी, सम्पादकः – प्रो.रमेशकुमारपाण्डेयः, संस्करणम् – सा.यु.२०१०, प्रकाशनसंस्था – श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली

8. **भास्करीयबीजगणितम् (आङ्ग्लव्याख्या);** रचयिता – वेणुगोपालः डि. हेरूरः, प्रकाशनवर्षम् – सा.यु.२०१८, प्रथमं संस्करणम्, प्रकाशनसंस्था – राष्ट्रियसंस्कृतविश्वविद्यालयः (प्राक्तनं राष्ट्रियसंस्कृतविद्यापीठम्), तिरुपतिः

9. **म.म.पं.सुधाकरद्विवेदिविरचितं दीर्घवृत्तलक्षणम्;** सम्पादको व्याख्याकारश्च – डॉ. चन्द्रमा पाण्डेयः; प्रथमसंस्करणम् – सा.यु.२००६; प्रकाशनसंस्था – शारदासंस्कृतसंस्थानम्, वाराणसी

10. **म.म.सुधाकरद्विवेदिप्रणीतया ‘सुधावर्षिणी’टीकया संवलितः सूर्यसिद्धान्तः;** सम्पादकः – विद्यावारिधिः श्रीकृष्णचन्द्रद्विवेदी; द्वितीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१६; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

11. **म.म.बापूदेवशास्त्रिकृता सरलत्रिकोणमितिः (संस्कृत-हिन्दीव्याख्योपेतम्);** व्याख्याकारः – पं.सत्यदेवशर्मा; संस्करणवर्षम् – सा.यु.२०१२; प्रकाशनसंस्था – चौखम्बा सुरभारती प्रकाशनम्, वाराणसी

12. **म.म.बापूदेवशास्त्रिकृता सरलत्रिकोणमितिः;** सम्पादकः – पण्डितश्रीगोविन्दपाठकः; प्रकाशनवर्षम् – सा.यु.२००२; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

13. **मन्दशीघ्रफलसाधनसमीक्षा;** ग्रन्थकर्ता – विद्यावाचस्पतिः डॉ.रामजीवनमिश्रः; प्रथमसंस्करणम् – सा.यु.२००५; प्रकाशनसंस्था – ठाकुरप्रकाशनम्

14. **श्रीमद्भास्कराचार्यप्रणीतः सिद्धान्तशिरोमणिः – स्वोपज्ञवासनाभाष्यसंवलितो नृसिंहदैवज्ञकृतवार्त्तिकोपेतश्च;** सम्पादकः – डॉ.मुरलीधरचतुर्वेदः; तृतीयं संस्करणम्; संस्करणवर्षम् – सा.यु.२०१०; प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

15. **सिद्धान्ततत्त्वविवेकः – प्रथमो भागः,** ग्रन्थकर्ता – कमलाकरभट्टः, व्याख्याकारः – श्रीगङ्गाधरशर्मा, द्वितीयसंस्करणम्, संस्करणवर्षम् – सा.यु.२०१७, प्रकाशनसंस्था – सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

16. **सिद्धान्तशिरोमणेर्गोलाध्यायस्योपपत्तिः** – लेखकः – डॉ. प्रेमकुमारशर्मा, संस्करणम् : सा.यु.२००५, प्रकाशनसंस्था – नागप्रकाशनम्, नवदेहली

17. **सिद्धान्तशेखरः ;** ग्रन्थकर्ता – श्रीपतिः, व्याख्याकारः – सत्यदेवशर्मा, प्रकाशनसंस्था – चौखम्बा कृष्णदास अकादमी, वाराणसी

18. **सिद्धान्तसम्राट्;** ग्रन्थकर्ता – जगन्नाथसम्राट्, प्रथमसंस्करणम्, संस्करणवर्षम् – सा.यु.१९७६, प्रकाशनसंस्था – संस्कृतपरिषद्, सागरविश्वविद्यालयः, सागरम् (मध्यप्रदेशः)

19. **सिद्धान्तसार्वभौमः – द्वितीयो भागः, ग्रन्थकर्ता** – मुनीश्वरः, प्रकाशनवर्षम् – सा.यु.१९३५, प्रकाशनसंस्था – राजकीयसंस्कृतमहाविद्यालयः, वाराणसी

20. **सुराकान्तसङ्कलितः ज्योतिर्विज्ञानशब्दकोषः**; लेखनं सम्पादनञ्च – डॉ. सुराकान्तझा; प्रथमं संस्करणम्; संस्करणवर्षम् – सा.यु.२००९; प्रकाशनसंस्था – चौखम्बा कृष्णदास अकादमी, वाराणसी

21. **सूर्यसिद्धान्तः (आर्षग्रन्थः)**; व्याख्याकारः – श्रीकपिलेश्वरशास्त्री; संस्करणवर्षम् – सा.यु.२०१५; प्रकाशनसंस्था – चौखम्भा संस्कृतभवनम्, वाराणसी

SAMVARDHINI
PEER REVIEWED MULTILINGUAL E-RESEARCH JOURNAL
(ISSN ONLINE: - 2583-7176)
https://samvardhini.in
https://www.samskritpromotion.in

**SAMVARDHINI:** - 20/12/2023
**Volume** - 5
**Issue** - 2
(ISSN ONLINE: - 2583-7176)
https://samvardhini.in



# श्रीमद्भागवतमहापुराणान्तर्गतमङ्गलपद्यत्रयस्य सामासिकविमर्शः

**लेखकः**
**डॉ. रूपलालशर्मा**

**शोधसारः -**

निगमकल्पतरोर्गलितफलभूतं श्रीमद्भागवतमेकतः परमभक्तैरास्वाद्यं वर्तते । अपरश्च विद्वद्भिरपि संसेव्यं विद्यते तद्यथा – विद्यावतां भागवते परीक्षा' अस्य श्रीमद्भागवतशास्त्रस्य वैशिष्ट्यमनेनैव स्पष्टं भवति यदाधुनिकेऽस्मिन् परिवेशेऽपि सर्वत्र एतत्कथामन्दाकिनी प्रवहन्ति दृश्यते । तथैव विद्वान्सोऽपि विविधटीकाप्रणयनेन निरन्तरमस्य महाग्रन्थस्य ग्रन्थिभेदनं कृतवन्तः । यद्यपि विद्वद्भिः टीकाकारैश्चेदं शास्त्रमधिकृत्य व्याकरणशास्त्रदृष्ट्यापि सुबहुप्रतिपादितं तथापि विद्वान्सः किमपि नूतनं स्फोरयितुं शब्दशास्त्रीयं चिन्तनमत्रानारतं कुर्वन्त्येव। श्रीमद्भागवतशास्त्रस्य प्रारम्भिकाणि मङ्गलपद्यान्यत्यन्तमेव सरसानि भावपूर्णानि च वर्तन्ते । दार्शनिकदृष्ट्यापि विद्वद्भिर्मङ्गलपद्यपरिशीलनं विधीयते । यथाऽस्माभिः पूर्वमपि निर्दिष्टं यद् व्याकरणशास्त्रस्य विविधानि तत्त्वानि नवनवार्थानुसन्धाने विशिष्टां भूमिकां निर्वहन्ति, तस्मादेव अस्माभिरत्र प्रारम्भिकमङ्गलपद्यत्रयस्य समासशास्त्रीयं परिशीलनं विधीयते। अत्रेदमुल्लेखनीयं यच्छलोकघटकीभूतानां पद्यानां विग्रहप्रकारोऽपि नूतनार्थानुसन्धाने महत्त्वपूर्णां भूमिकां निर्वहति ।

**डॉ. रूपलालशर्मा**
सहायकाचार्यः,व्याकरणम्
केन्द्रीयसंस्कृतविश्वविद्यालयः,
गङ्गानाथझापरिसरः,प्रयागराजः,
उत्तरप्रदेशः
dr.rooplalsharma36@gmail.com

व्याकरणशास्त्रस्य घटकीभूतस्य समासशास्त्रस्य प्रयोगक्षेत्रमपि विशालं वर्तते, प्रायशः तत्प्रयोगेण कवयो विद्वान्सो दार्शनिकाश्च समासानां प्रयोगं विधाय स्वकीयासु पदावलीषु महान्तमर्थं बिभ्रति, तस्मादिह आदिमानां मङ्गलपद्यानां समासदृष्ट्या निरूपणं विधीयते।

**प्रथमपद्यगतसमस्तपदविमर्शः**

श्रीमद्भागवतस्यादिमे मङ्गलाचरणात्मके पद्ये भागवतकारेण नैकेषां समस्तपदानां प्रयोगो विहितः तत्र **'जन्माद्यस्य'**[1] इति पदे जन्म आदिर्यस्येति तद्गुणसंविज्ञानबहुव्रीहिसमासो वर्तते, अभिप्रायोऽयं वर्तते यद् यस्मिन् जन्मादिपदेनैव स्थितिभङ्गयोरप्यवबोधो जायते । महर्षिणा वेदव्यासेन वस्तुतः ब्रह्मसूत्रस्यादिमसूत्रेणैवैतस्य महत्त्वभूतस्य भागवतशास्त्रस्यारम्भो विहितः। अपरं वैशिष्ट्यमपि जन्मादिपदेन द्योत्यते तच्च जन्म आदिर्ययोरिति अन्यपदार्थत्वेनात्र स्थितलययोरप्यवबोधो भवति। जन्मादिपदे य आदिशब्दः सः व्यवस्थावाची वर्तते। तत्रैव मङ्गलाचरणात्मके प्रथमे पद्ये **'अभिज्ञ'**[2] इति पदमपि वर्तत एतस्य च विग्रहवाक्यम् अभिजानाति इति अभिज्ञः अत्र उपपदतत्पुरुषसमासो वर्तते, अभिजानातीति ज्ञः अत्र अभीत्युपसर्गपूर्वकात् 'ज्ञा अवबोधने'[3] धातोः **'आतश्चोपसर्गे'**[4] इत्यनेन सूत्रेण क-प्रत्यये विहिते सति पदं सिध्यति। ईश्वरो जगतः बुद्धिपूर्वकरचनामकरोत् अथवा कंसवञ्चनादिकार्येष्वेवंविधेषु च प्रयोजनेषु सर्वथाभिज्ञः ईश्वरो वर्तते,यथा सर्वज्ञः इति पदं वर्तते तथैवाभिज्ञः इति पदस्याप्यत्राभिप्रायो वर्तते। अत्रैवान्यपदं **स्वराट्**[5] वर्तते, स्वेन राजते इति विग्रहवाक्ये राजृ-दीप्तौ धातोः क्विप्-प्रत्यये स्वराडिति पदं निष्पद्यते। वस्तुतः एतानि सर्वाणि पदानि **'धीमहि'**[6](ध्यायेम) इति क्रियया सह अन्वितानि भवन्ति। **'तेजोवारिमृदाम्'**[7] इत्यस्य पदस्य विग्रहवाक्यं तेजः च वारि च मृच्च तेजोवारिमृदः तासां तेजोवारिमृदाम्, द्वन्द्वगर्भतत्पुरुषसमासोऽत्र वर्तते। एतस्य पदस्य विनिमय इति पदेनान्वयो वर्तते। अस्य पदस्य विषये एवमपि वक्तुं शक्यते यद्यथा क्वचिद् भ्रान्तिवशात् प्रचण्डातपे निर्जलभूमौ दूरदेशे जलस्याभावेऽपि जलस्य भानमनुभूतिर्वा भवति

[1] जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा।
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि'।। श्रीमद्भागवतमहापुराणम् , 1.1.1

[2] श्रीमद्भागवतमहापुराणम् , 1.1.1

[3] पा.धातु.पा. चौखम्भा संस्कृत सीरीज्, धातुसं.-1507

[4] पा.अ.-3.1.136

[5] श्रीमद्भागवतमहापुराणम् -1.1.1

[6] श्रीमद्भागवतमहापुराणम् - 1.1.1

[7] श्रीमद्भागवतमहापुराणम् - 1.1.1

तथैव वेदान्तदृष्ट्या जगतो परमार्थतः सत्ता न विद्यते तथापि तस्यानुभूतिर्जायते। तथैवाजलेऽपि जलबुद्धिरेव तेजोवारिमृदां विनिमय इत्यस्ति।

प्रकृते **'त्रिसर्गः'**[1] इति पदे सङ्ख्यापूर्वत्वाद्, **'तद्धितार्थोत्तरपदसमाहारे च'**[2] इति शास्त्रानुसारं द्विगुसमासे विहिते त्रयाणां सर्गाणां समाहार इति विग्रहवाक्यपुरःसरं **'द्विगुरेकवचनम्'**[3] **'स नपुंसकम्'**[4] इत्यादिभिः शास्त्रवचनैश्च त्रिसर्गमिति पदं स्यात् परन्तु पुनरपि भागवतकारेण 'त्रिसर्ग' इति पुंलिङ्गे प्रयोगो विहितः तस्माद् वक्तुं शक्यते यदत्र द्विगुसमासश्च नास्त्येव तर्हि किं त्रयश्चेमे सर्गाश्च त्रिसर्गाः इत्यत्र **'तत्पुरुषः समानाधिकरणः कर्मधारयः'**[5] इति नियमेन कर्मधारयसमासः स्यात् पुनश्च व्यक्तिपक्षे एकवचने 'त्रिसर्ग' इति भवेदित्यपि समीचीनं न प्रतीयते तर्ह्यन्ते त्रयः सर्गाः यस्य (परमात्मनः) बहुव्रीहिसमासेनैव विषयस्य प्रतिपादनं कृतं स्यात्, अत्रास्माभिरपि एवमेवानुभूयते यद् वस्तुतोऽत्र भागवतकारेण बहुव्रीहिसमासस्याश्रयेण परमात्मा श्रीकृष्ण एव एतस्याः सत्त्वरजस्तमोगुणान्वितायाः त्रिविधसृष्टेः स्रष्टा वर्तते, तं प्रत्येव त्रिसर्ग इति पदं सङ्केतयति। अग्रे **'अमृषा'**[6] इति पदस्य विग्रहवाक्यं न मृषा अमृषेत्यत्र नञ्तत्पुरुषसमासो वर्तते। **'न लोपो नञ्'**[7] इत्यनुशासनेन नकारस्य लोपे सति अकारे शिष्टेऽमृषेति वर्तते, मृषेति मिथ्यावाचकमव्ययपदं वर्तते। कीदृशः त्रिसर्गः ? प्रत्युत्तरे अमृषा त्रिसर्ग इति वर्तते। वस्ततुतोऽयं त्रिसर्गोऽसत्यं वर्तते परन्तु परमात्मनो मायया मृषा सन्नप्यमृषा अर्थात् सत्यवत् प्रतीयते। पुनश्च प्रकृते प्रथमे पद्ये **'निरस्तकुहकम्'**[8] इत्यस्य विग्रहवाक्यं निरस्तं कुहकं यस्मिन् (तम्) इत्यत्र बहुव्रीहिसमासो वर्तते। कुहकमिति कपटपर्यायो मायालक्षणं तत्कुहकं वक्तुं शक्यते। **'कुह्-विस्मापने'**[9] धातोः क्वुन्-प्रत्यये कृते सति कुहकमिति पदं निष्पद्यते, यस्मिन् परमात्मनि कपटस्य लेशमात्रोऽपि न विद्यते, अथवा संसाररूपाज्ञानतमो यस्यानुकम्पया निरस्तं नष्टं जायते, जीवस्य वाज्ञानस्य नाशनेऽपि परमात्मैव समर्थो वर्तते। तादृशं श्रीकृष्णपरमात्मनं वयं ध्यायेम इति भावार्थो वर्तते।

---

[1] श्रीमद्भागवतमहापुराणम् - 1.1.1
[2] पा.अष्टा.सङ्ख्यापूर्वो द्विगुः-2.1.52
[3] पा.अष्टा.-2.4.1
[4] पा.अष्टा.-2.4.17
[5] पा.अष्टा.-1.2.42
[6] श्रीमद्भागवतमहापुराणम् , 1.1.1
[7] पा.अष्टा.-6.3.73
[8] श्रीमद्भागवतमहापुराणम् , 1.1.1
[9] पा.धातु.पा.- (चौखम्भा संस्कृत सीरीज्) धातुसंख्या - 1901

**द्वितीयपद्यगतसमस्तपदविमर्शः**

श्रीमद्भागवतस्य प्रथमस्कन्धस्य प्रथमाध्यायस्य द्वितीये पद्ये **'प्रोज्झितकैतवः'**[1] इति समस्तपदं वर्तते । एतस्य विग्रहवाक्यं प्रकृष्टतया उज्झितं = प्रोज्झितम्, प्रोज्झितं कैतवं यस्मिन् (सः) इत्यत्र बहुव्रीहिसमासो वर्तते, सः कः ? इति जिज्ञायाम् प्रोच्यते यत् सः धर्मोऽथवा एतादृशः कपटरहितो धर्मोऽस्मिन् शास्त्रे निगद्यते, यतोऽग्रिमपदेनैतस्यैव पूर्वोक्तस्य पदस्य समर्थने हेतुमुपस्थापयति, **'निर्मत्सराणां सतां'**[2] निर्गतः मत्सरः येभ्यः ते निर्मत्सराः, तेषां निर्मत्सराणामर्थाच्छलकटपरहितानां एव निर्मत्सराणां, क्वचिद् मत्तोऽग्रे सरत्ययमिति । भावोऽयं विद्यते यदसौ मदधिकामुन्नतिं कुरुते इति दृष्ट्वा हृदि य ईर्ष्याभाव उपजायते स एव परोत्कर्षस्यासहनमेव मत्सरः , तद्विरहितास्ते निर्मत्सरा इति । अन्यैः शब्दैरपि वक्तुं शक्यते यद् ये आप्ताः शिष्टा विबुधाश्च सन्ति येषाञ्च वाक्यमसंशयं वर्तते, तादृशाः सत्ये स्थिता नीरजस्तमा एव निर्मत्सराः सन्ति । प्रश्नोऽयमुदेति यत्कस्मात् ते निर्मत्सराः ? तत्रोच्यते एवंविधानां नीरजस्तमसां साधूनां कश्चनापि निजस्वार्थो न वर्तते. मायारहिताश्च ते कस्माद् हेतोरसत्यभाषणं करिष्यन्ति, नूनं ते सत्याचरणं सत्यभाषणञ्चैव विधास्यन्ति, तेषाञ्च चेतांसि सर्वथा मालिन्यरहितानि वर्तन्ते, मलस्य लेशमात्रमपि तत्र न विद्यते । कैतवमिति पदं कितवस्य भावो गुणो वैतस्मिन्नर्थे तद्धितवृत्तौ अण्-प्रत्यये कृते निष्पद्यते । कैतवोऽत्र, इत्यस्मिन् पदे अत्रेति अव्ययम् अस्मिन् श्रीमद्भागवतशास्त्रे इत्यस्य कृते प्रयुक्तः, अर्थात् अस्मिन् भागवतमहापुराणे प्रोज्झितकैतवो धर्मः प्रकथित इत्यभिप्रायः ।

कीदृशं भागवतरूपवस्तु तत्त्वं वा वर्तते ? तस्मिन् विषये कथ्यते – **'शिवदम्'**[3] शिवं (कल्याणं) ददातीति शिवदम्, अत्रोपपदतत्पुरुषसमासो वर्तते। एवंविधेन शिवदवस्तुना किं स्यात् ? तस्मिन् विषये प्रोच्यते यत्त्रयाणां तापानामुन्मूलनमनेन स्यात्तदेव निगदितं भागवतकारेण **'तापत्रयोन्मूलनम्'**[4] इति तापत्रयस्योन्मूलनं तापत्रयोन्मूलनं षष्ठीतत्पुरुषसमासः, भौतिकाध्यात्मिकाधिदैविकाः त्रिविधतापाः प्रसिद्धा एव। एवंविधानां तापानां सर्वथा समूलकाशकशनं श्रीमद्भागवतशास्त्रेण भवति। सर्वेऽपि प्राणिन एभिः त्रिभिरेव तापैः सन्तप्ताः सन्ति। यथा घर्मकाले निदाघतप्ताः जनाः गङ्गाजलावगाहनेन शान्तिमधिगच्छन्ति तथैव भागवतरूपवस्तुनो मननेन चिन्तनेन निदिध्यसनेन

[1] धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां,
वेद्यं वास्तवमत्र वस्तुशिवदं तापत्रयोन्मूलनम्।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः,
सद्यो हृद्योऽवरुध्यतेऽत्र कृतिभिः सुश्रुषिभिस्तत्क्षतात्॥श्री.भा.महा.पु.- 1.1.2

[2] श्री.भा.महा.पु.- 1.1.2

[3] श्री.भा.महा.पु.- 1.1.2

[4] श्री.भा.महा.पु.- 1.1.2

च मानसशान्तिं प्राप्नुवन्ति । केनेदं शास्त्रं प्रणीतम् ? तस्मिन् विषये निगद्यते यद् महामुनिना श्रीमता वेदव्यासेनैतत्प्रणीतम् । महामुनिरिति विशेषणपदं महर्षिवेदव्यासाय प्रयुक्तम् । **'महामुनिः'**[1] इत्यत्र विग्रहवाक्यं महांश्चासौ मुनिः महामुनिः 'कर्मधारयसमासः' महामुनिना कृतमिति महामुनिकृतं,तस्मिन् महामुनिकृते ।

**तृतीयपद्यगतसमस्तपदविमर्शः**

पद्येऽस्मिन् **'निगमकल्पतरोः'**[2] इति समस्तपदं वर्तते तस्य विग्रहवाक्यं तु निगमरूपश्चासौ कल्पतरुश्च, निगमकल्पतरुः तस्य 'निगमकल्पतरोः' मध्यमपदलोपितत्पुरुषसमासः । निश्चयेन निःशेषेण सम्पूर्णतया वा गमयति बोधयति वा सर्वविधान् पुरुषार्थोपायान् सः निगमः, निगम इति पदमत्र वेदवाचकः, तादृशस्य निगमरूपस्य कल्पतरोः (वेदस्य) गलितं सुपक्वं फलं भागवतं वर्तते। कल्पतरोरिति साकाङ्क्षपदं वर्तते फलमिति तस्य पूर्णकं पदम् ।

अग्रिमं समस्तपदं **'शुकमुखाद्'**[3] इति वर्तते, शुकस्य मुखमिति विग्रहवाक्यम्, तस्मात् शुकमुखात्,,षष्ठीतत्पुरुषसमासः । अत्र शुक इति पदेन महामुनिर्भगवान् शुकदेवो व्यासनन्दनः कथ्यते, क्वचिच्च भागवते वैयासकिरित्यपि तस्य संज्ञा वर्तते । अपरस्मिन् लौकिकेऽर्थे शुक इति शुकपक्षिपर्यायपदं तत्र लौकिके व्यवहारे शुकपक्षिणः प्रसिद्धं किञ्चिद् वैशिष्ट्यमिदं समासेनाकर्ण्यते - शुकपक्षिविशेषो विशेषतया फलस्य निरीक्षको भवति, स यस्मिन् फले स्वीयचञ्च्वायाः प्रहारं स्पर्शनं वा कुरुते तत् फलं सामान्यफलापेक्षया अतीवमधुरं स्वादु च भवतीति । तया दृष्ट्या भागवतशास्त्रं पश्यामश्चेदत्रापि भगवतः शुकदेवेन आस्वादितस्य भागवतशास्त्रस्य प्रवचनं निसरणं वा जातं, राजा परीक्षितश्चेवंविधस्य भागवतरूपस्य विशिष्टफलस्य प्रधानतया आस्वादयिता, तन्माध्यमेनैवान्ये सर्वे ऋषयो सामान्याः जनाः पिपासवश्चापि एतस्य फलस्य रसास्वादनमकुर्वन् । अतो विशिष्टमेव एतच्छास्त्रं वर्तते, नास्त्यस्य वैशिष्ट्ये कश्चन सन्देहलवोऽपि ।

सम्प्रति **'अमृतद्रवसंयुतम्'**[4] इति समस्तपदं वर्तते, अमृतञ्चेदं द्रवञ्च अमृतद्रवं, तेनामृतद्रवेण संयुतममृतद्रवसंयुतम्, अत्रादौ कर्मधारयसमासः पुनश्च तृतीयातत्पुरुषः अतः, कर्मधारयगर्भतृतीयातत्पुरुषसमास इति वक्तुं शक्यते । अमृतद्रवसंयुतमित्येतस्य व्याख्याने श्रीधराचार्यचरणा ब्रुवन्ति यद् - **'अमृतरूपेण द्रवेण संयुतमिति**[5]**'**

---

[1] श्री.भा.महा.पु.- 1.1.2

[2] निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुविभावुकाः।। श्री.भा.महा.पु.- 1.1.3

[3] श्रीमद्भागवतमहापुराणम् – 1.1.3

[4] श्रीमद्भागवतमहापुराणम् – 1.1.3

[5] श्रीमद्भागवतम् ,श्रीधरीटीका, 1.1.3

अमृतमित्यस्य सामान्योऽर्थः यो मरणधर्मा नास्ति, अथवा अस्य कदापि मरणं विनाशो वा न जायते, तादृशस्तु परमात्मैव विद्यते अतोऽमृतपदेन परमात्मनः श्रीकृष्णस्यैव बोधो वरिवर्ति ।

**उपसंहारः** –

इत्थमस्माभिः श्रीमद्भागवतमहापुराणस्य मङ्गलपद्यत्रयस्य समासशास्त्रीयं विवेचनमत्र प्रस्तुतम् । अत्र विविधप्रकारस्य बहुविधविग्रहस्य, तस्यापि संक्षेपेणैव निर्देशोऽस्माभिः कृतः । कथं विग्रहप्रकारवैविध्येन अर्थेष्वपि वैलक्ष्ण्यं जायते इत्यप्यत्र सङ्केतितम् । इदमस्माभिरवधेयं यदत्र प्रायशोऽव्ययीभावसमासमतिरिच्य तत्पुरुषादीनां समेषां समासानां भेदोपभेदानामुदाहरणानि प्राप्यन्ते । इदं वक्तुं शक्यते यदस्याः पद्यत्रय्याः वैशिष्ट्यस्य सम्पादने सरसतायाश्चाधाने समासानां वैशिष्ट्यं वर्तते ।

SAMVARDHINI
PEER REVIEWED MULTILINGUAL E-RESEARCH JOURNAL
(ISSN ONLINE: - 2583-7176)
https://samvardhini.in
https://samskritpromotion.in

**SAMVARDHINI:** - 20/12/2023
**Volume** - 5
**Issue** - 2
(ISSN ONLINE: - 2583-7176)
https://samvardhini.in



# प्राचीनभारते गुरुकुलशिक्षायाः महत्त्वम्

**लेखकः**
**विष्णु-प्रसाद-उपाध्यायः**

**शोधसारः -**

येन केन प्रकारेण उदरपूर्तिः मानवस्य उद्देश्यं नास्ति । आहार-निद्रा-भय-मैथुनादयः क्रियाकलापाः पशुप्राणिषु अपि प्राप्यन्ते एव, येन केनापि प्रकारेण आहारप्राप्तिः तेषाम् उद्देश्यं भवति । किन्तु मानवस्य तथा नास्ति, मानवस्य उद्देश्यं मोक्षप्राप्तिः अस्ति । अतः मोक्षप्राप्तिनिमित्तं सात्त्विकभावनया गुरुकुले गुरोः समीपे उपविश्य अध्ययनं तपोयुक्तजीवनं च आवश्यकमिति कारणेन ज्ञायते यत् गुरुकुलशिक्षायाः महत्त्वम् अत्यधिकमस्ति ।

**विष्णु-प्रसाद-उपाध्यायः**
वरिष्ठशोधाध्येता
संस्कृतसंवर्धनप्रतिष्ठानम्
आर्यसमाजमंदिरस्य द्वितीये तले
11204/5, मन्दिरमार्गः डोरीवालान,
नवदेहली 110006
bishnupoudel1992@gmail.com

**'शिक्ष्** [1]**'** इति धातोः "अ" इति कृत्-प्रत्ययात् स्त्रियां टाप्-प्रत्यये कृते सति **'शिक्षा'** इति शब्दः निष्पद्यते । यस्याः अर्थः भवति – ज्ञानमिति । **शिक्षा** मनोवैज्ञानिक-शारीरिक-भाषिक-सांस्कृतिक-नैतिकगुणानां विकासकरणे महत्त्वपूर्णां भूमिकां निर्वहति । शिक्षायाः माध्यमेन एव जनः समाजे सफलतां समृद्धिं च प्राप्नोति, सार्धमेव समृद्ध-स्वतन्त्र-सकारात्मकरूपेण जीवनमपि यापयति । एषा शिक्षा द्विप्रकारिका वर्तते - एका आधुनिकी शिक्षा अपरा च गुरुकुलशिक्षा इति । वयम् अस्मिन् लेखे गुरुकुलशिक्षायाः विषये चर्चां करिष्यामः ।

1 शिक्ष विद्योपादाने – भ्वादिगणीयधातुः ।
2 पाणिनि-अष्टाध्यायी – ३. ३. १०२

**'गुरुकुलशिक्षा'** इत्यत्र गुरुशब्दः आदौ पठितः इति कारणेन वयं सर्वप्रथमं गुरोः विषये जानीमः - 'गुरु'शब्दस्य अन्वेषणम् अस्मदीयैः पूर्वजैः ऋषिभिः महर्षिभिश्च कृतम्, यस्यार्थः अस्ति सर्वव्यापकः, अर्थात् शिष्यः गुरोः समीपं गत्वा ज्ञानरूपिणीं पिपासां शमयति, तथा च गुरुः शिष्येषु विद्यमानानां दोषाणाम् अपाकरणमपि करोति।

**उक्तं च**

**'गु'शब्दस्त्वन्धकारश्च 'रु'शब्दस्तन्निवारकः।**
**अन्धकारनिरोधत्वात् गुरुरित्यभिधीयते ॥**[1]
**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः ॥**[2]

अर्थात् गुरुः ज्ञानस्य आविष्कर्ता ज्ञानस्य संरक्षकः अज्ञानस्य संहारकश्च अस्ति। एकवाक्येन वदामश्चेत् गुरुः अस्य जगतः सृष्टिकर्ता, पालनकर्ता, संहारकर्ता, सर्वशक्तिमान् परब्रह्मपरमात्मा च अस्ति । गुरोः विषये गोस्वामितुलसीदासस्य कथनम् इत्थम् अस्ति।

अर्थात् यः कोऽपि स्यात्, सः साक्षात् ईश्वरः एव किमर्थं न स्यात्, किन्तु सः गुरुं विना एतं भवसागरं तर्तुं न शक्नोति।

**बंदउ गुरु पद कंज कृपा सिंधु नररूप हरि।**
**महामोह तम पुंज जासु बचन रबि कर निकर ॥**[3]

अर्थात् अहं तादृशस्य गुरोः चरणवन्दनां करोमि, यः कृपासिन्धुः सन् मानवरूपेण साक्षात् भगवान् नारायणः एव अस्ति। यस्य वचनं महामोहरूपिणम् अन्धकारं नाशयति, कबीरः अपि वदति -अर्थात् तीर्थं गच्छामः तदा एकगुणितं फलं प्राप्यते, सतां समागमेन चतुर्गुणितं फलं प्राप्यते, किन्तु गुरोः सान्निध्ये तु अनन्तगुणितं फलं प्राप्यते । श्रीमद्भगवद्गीतायामपि उच्यते -

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥**[4]

अर्थात् सर्वाणि साधनानि त्यक्त्वा केवलं नारायणस्वरूपस्य गुरोः शरणे गन्तव्यम्, स एव सर्वाणि पापानि नाशयित्वा मोक्षं ददाति इति। गुरोः विषये आचार्यः चाणक्यः वदति -

**जनिता चोपनेता च यस्तु विद्यां प्रयच्छति।**
**अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥**[5]

अर्थात् जन्मदाता, उपनयनकर्ता, विद्यादाता, अन्नदाता भयत्राता च एते पञ्चविधाः पितरः सन्ति, इत्थं पश्यामश्चेत् गुरुः पिता इत्येतयोः कोऽपि भेदः नास्ति इति।

1 द्वयोपनिषद् - श्लोकः - ३
2 द्वयोपनिषद् - श्लोकः - ४
3 राम चरितमानसं बालकाण्डम् – ५ श्लोकः
4 गीता - १८/६६
5 चाणक्यनीतिः – ४.१९

इत्थम् अस्माकं सनातनवाङ्मये गुरुशब्दस्य व्याख्यानं प्राप्यते । किन्तु पाश्चात्यजनाः गुरोः महिम्नः विषये न जानन्ति, तेषां शब्दकोषे गुरोः स्थाने 'शिक्षक'शब्दः तथा च शिष्यस्य स्थाने 'विद्यार्थि'शब्दः वर्तते । अतः पाश्चात्याः केवलं शिक्षकस्य विद्यार्थिनः च विषये एव वक्तुं शक्नुवन्ति । ते गुरुशिष्ययोः एतादृशात् ज्ञानरसात् वञ्चिताः सन्ति ।

### गुरुकुलस्य परिचयः

यदा बालकः षड्वर्षीयः भवति स्म, तदा उपनयनसंस्कारानन्तरमध्ययनाय गुरुकुलं गच्छति स्म, केषुचित् गुरुकुलेषु आयुः अधिकमपि भवति स्म । गृहं त्यक्त्वा गुरोः अधीने स्थित्वा ब्रह्मचर्यपूर्वकं त्याग-तपोयुक्तं जीवनसहितं विद्यार्जनमेव गुरुकुलस्य प्रमुखम् उद्देश्यम् अस्ति । अस्यां प्रणाल्यां मूलरूपेण त्रीणि तत्त्वानि प्राप्यन्ते –

- गुरुशिष्ययोः आत्मिकसम्बन्धः ।
- सत्य-तपः-दम-शमादिभिः दृढचरित्रस्य निर्माणम् ।
- स्वाध्यायः अर्थात् अपराविद्यायाः प्राप्तिः ।

तस्मिन् काले छात्रः पञ्चविंशतिवर्षाणि यावत् गुरोः सान्निध्ये स्थित्वा स्वाध्यायं करोति स्म । सः पूर्णरूपेण ब्रह्मचर्यनियमान् पालयित्वा विद्याध्ययनं करोति स्म, इति कारणेन एतस्य नाम ब्रह्मचर्याश्रमः अपि अस्ति । प्राचीनगुरुकुले वेद-दर्शन-उपनिषद्-व्याकरणग्रन्थादिभिः सहितं गणित-भौतिक-विज्ञान-रसायनविज्ञान-जीवविज्ञान-सामाजिकविज्ञान-चिकित्सा-भूगोल-खगोल-अन्तरिक्ष-गृहनिर्माण-शिल्प-कला-सङ्गीत-तकनीकी-राजनीति-अर्थशास्त्र-न्याय-विमानविद्या-युद्ध-आयुधनिर्माण-योग-यज्ञ-कृषयः चेत्यादयः विषयाः पाठ्यन्ते स्म । भगवता श्रीकृष्णेन गुरुकुले एव चतुःषष्टिः विद्याः पठिताः, इति सर्वविदितमेव अस्ति ।

गुरुकुले स्वाध्यायस्य कालः सूर्योदयात् आरभ्य सूर्यास्तपर्यन्तं भवति स्म । सूर्यास्तानन्तरं छात्राः संध्यावन्दन-अग्निहोत्रादिषु कार्येषु संलग्नाः भवन्ति स्म । अनन्तरं भोजनं कृत्वा शयनं कुर्वन्ति स्म । केवलं वारद्वयम् एव भोजनस्य नियमः आसीत् । यतो हि दीर्घायुः-निमित्तं दिवसे वारद्वयम् एव भोजनम् उचितं भवति ।

### गुरुकुलस्य उद्देश्यम्

प्रत्येकं मनुष्यस्य स्वजीवने उद्देश्यं भवितव्यं यत् वैदिकसाहित्य-पुराण-ब्रह्मसूत्र-गीता-उपनिषदाम् अध्ययनं मननम्, तथा च सन्ध्यावन्दन-यज्ञयागादीनामनुशीलनम्, मातृपितृगुरूणां सेवा, जीवजन्तु-पशुपक्षि-वृक्षैः सह आत्मिकमैत्रीभावः इति एतादृशमुद्देश्यं गुरुकुलीयशिक्षया एव भवति स्म । गुरुकुले अध्ययन-अध्यापनकारयितारः गुरुशिष्याः योगाभ्यासद्वारा ईश्वरस्य साक्षात्कारं कृत्वा भौतिकपदार्थेन अप्राप्यमाणम् आनन्दं प्राप्नुवन्ति स्म । सर्वव्यापकस्य आनन्दस्वरूपस्य ईश्वरस्य प्राप्तिः गुरुकुलीयशिक्षया एव सम्भवः अस्ति इति सामाजिकाः अपि जनाः जानीयुः इति गुरुकुलस्य उद्देश्यम् अस्ति । गुरुकुले संस्कृतेन अथवा मातृभाषया अध्यात्म-वैदिकसाहित्य-उपनिषद्-पौराणिक-साहित्यसदृशानां विषयाणाम् अध्यापनं निरन्तरं भवति स्म ।

अस्यां प्रणाल्याम् अध्यात्मविद्याभिः सह आधुनिकशिक्षापि पाठ्यते स्म, इति कारणेन एतस्य उद्देश्यम्, पवित्रं, गभीरं, व्यापकं सर्वतोमुखि च आसीत्।

**अस्याः शिक्षायाः कानिचन प्रमुखाणि उद्देश्यानि सन्ति –**

- गुरुशिष्ययोः सम्बन्धः मातृपितृवत् भवति इति आदर्शस्य स्थापनम्।
- शिष्यस्य शारीरिक-मानसिक-आध्यात्मिकविकासकरणम्।
- छात्राणां चरित्रविकासेन सह प्राचीनपूर्वीयसंस्कृत्या सह परिचयः।
- वैदिक-संस्कृतसाहित्ययोः शिक्षाप्रणाल्यां स्थापनम्।
- प्राचीनज्ञानेन सह आधुनिकज्ञानस्य समन्वयस्थापनम्।
- अध्यात्मविषयेषु अर्थात् दर्शन-विज्ञान-इतिहासादिषु शोधकार्यकरणम्।

**गुरुकुलस्य ऐतिहासिकता शिक्षा च**

भारतवर्षस्य प्राचीन-इतिहासे गुरुकुलस्य अत्यधिकं महत्त्वम् आसीत्। तस्मिन् समये प्रसिद्ध-आचार्येण सञ्चालिते गुरुकुले अध्येतारः शिष्याः अत्यधिकं सम्मानं प्राप्नुवन्ति स्म। महर्षिणा विश्वामित्रेण वशिष्ठेन च सञ्चालिते गुरुकुले श्रीरामेण अध्ययनं कृतम्, तथैव श्रीकृष्णेनापि सान्दीपनिगुरुकुले अध्ययनं कृतम्। तथैव पाण्डवाः अपि द्रोणाचार्यस्य गुरुकुले अध्ययनं कृतवन्तः इति संस्कृतसाहित्यस्य इतिहासात् ज्ञायते। गुरुकुले अध्ययनं कृतवन्तः श्रीराम-श्रीकृष्ण-पाण्डवादयः कियत् सम्मानं प्राप्तवन्तः इति कल्पनामपि कर्तुं न शक्नुमः। भारतवर्षस्य प्राचीन-इतिहासं यदा पश्यामः तदा तस्मिन् काले त्रिविधाः शैक्षणिकसंस्थाः आसन्। प्रथमम् - गुरुकुलम्, द्वितीया – परिषद्, तृतीया - तपःस्थली चेति।

गुरोः आश्रमे गुरूणां सान्निध्ये स्थित्वा यत्र अध्ययनं भवति स्म, तस्याः संस्थायाः नाम गुरुकुलम् आसीत्। विशेषज्ञैः विद्वभिः च दीक्षाप्रदानसंस्थायाः नाम परिषद् आसीत्। तथैव प्रवचनद्वारा ज्ञानप्राप्त्याः संस्थायाः नाम तपःस्थली आसीत्। उदाहरणार्थं प्राचीननैमिसारण्यं तपःस्थलीरूपेण प्रसिद्धम् आसीत्।

प्राचीनकाले गुरुकुलीयशिक्षा सर्वथा निःशुल्कम् आसीत्। गुरुकुलस्य व्ययः समाजस्य दानेन तथा च सर्वकारीयानुदानेन चलति स्म। गुरुकुलशिक्षायाः व्यवस्था ग्रामात् दूरं वने भवति स्म। तस्मिन् काले छात्रा-छात्रयोः कृते गुरुकुलीयशिक्षा भवति स्म। गुरुकुले शिक्षायाः माध्यमं संस्कृतम् एव आसीत्, एषा संस्कृतं देवभाषा, वेदभाषा, प्राचीनभाषा च वर्तते।

पौराणिककालानन्तरं गुरुकुलीयशिक्षायाः स्तरः विश्वविद्यालयपर्यन्तम् आगतम् । अतः प्राचीनभारतवर्षे नालन्दा-तक्षशिलाविश्वविद्यालयानां, वल्लभीपुरादीनां गुरुकुलानां च स्थापना अभूत् । आधुनिककाले सर्वप्रथमं गुरुकुलस्य स्थापना स्वामिना श्रद्धानन्दसरस्वतीमहाभागेन हरिद्वारस्य कांगड़ीनामके ग्रामे ईसवीये १९०२ इत्यत्र कृता । इत्थं गुरुकुलस्य विकासः, विस्तारः क्रमशः सञ्जातः । एतेन एव मार्गेण राष्ट्रस्य अध्यात्म-संस्कृति-परम्परागतगरिमा पुनः स्थाप्यते ।

## गुरुकुलस्य परम्पराद्वयम्

प्राचीनकाले गुरुकुलस्य या धारा आसीत् । भारतवर्षे अपि सैव धारा दृश्यते स्म – विशेषतः उत्तरे हिमालयात् आरभ्य दक्षिणे कन्याकुमारीपर्यन्तम्, पूर्वस्यां बङ्गालस्य खाडीत्यतः पश्चिमायाम् अरबसागरपर्यन्तं गुरुकुलस्य परम्पराद्वयं प्राप्यते- शैवपरम्परा वैष्णवपरम्परा चेति ।

शैवपरम्परायां भगवता शङ्करेण पठिताः विद्याः आगच्छन्ति । यत्र व्याकरण-सङ्गीत-तन्त्रादयः प्रमुखरूपेण सन्ति ।

वैष्णवपरम्परायां भगवतः नारायणात् ब्रह्म-वशिष्ठ-शक्ति-पराशर-व्यास-शुकदेवैः पठिताः विद्याः आगच्छन्ति ।

## गुरुकुलस्य विशेषता

गुरुकुले अध्ययनं कुर्वाणाः छात्राः गुरुकुलस्य अङ्गानि भवन्ति स्म । ते गुरुकुले तपस्यायुक्तजीवनस्य अभ्यासं कुर्वन्ति स्म । गुरुकुले धनिक-निर्धन-उच्च-नीच-महिला-पुरुषेषु कोऽपि भेदः न भवति स्म । अतः सर्वेषां समानरूपेण शिक्षायाः अधिकारः आसीत्, इति गुरुकुलस्य प्रमुखा विशेषता वर्तते ।

## सनातनधर्मः गुरुकुलं च

सनातनधर्मे जल-अग्नि-सूर्य-पृथ्वी-वायु-आकाश-वृक्ष-पाषाण-मृत्तिकादयः सर्वेऽपि देवतासमानाः आसन्। प्रत्येकं वस्तुषु देवतायाः वासः भवति इति मान्यतानुसारं प्रकृत्याः प्रत्येकम् अङ्गस्य पूजा भवति स्म ।

शुक्लयजुर्वेदस्य षट्त्रिंशे तथा च सप्तदशे अध्याये स्थितासु ऋक्षु प्रकृत्याः महत्त्वविषये एवम् उक्तम् अस्ति ।

**द्यौः शान्तिरन्तरिक्षं ँ शान्तिः पृथ्वी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।**[1]

अर्थात् आकाश-अन्तरिक्ष-पृथ्वी-जल-ओषधी- वनस्पति-विश्वेदेव-ब्रह्मरूपादिषु ईश्वरेषु सर्वेषु शान्तिः स्यात् इति ।

एवं पश्यामः तदा अस्माकं सनातनधर्मः महान् विशालश्च दृश्यते । अद्य मनुष्याणामेव कारणेन एव जलस्य भाण्डारेषु वृक्षादिषु वायुषु प्राकृतिकवस्तुषु च प्रदूषणं वर्धमानं वर्तते ।

[1] शु.यजु.- ३६-१७

प्राचीनकाले जलस्य देवता वरुणः, अग्नेः देवता अग्निः, ओषधीनां देवता सोमः इति देवतत्त्वस्य परम्पराकारणेन प्रकृतिसंरक्षणे महत्त्वपूर्णा भूमिका आसीत्।

वैदिकग्रन्थेषु वृक्ष-वन-जलादिभिः आच्छादितस्य स्थानस्य प्रशंसां कुर्वन्, तैः मानवस्य रक्षणं कुर्युः इति प्रार्थना कृता अस्ति। अतः एव वैदिकग्रन्थे मनुष्याणाम् आयुः शतवर्षपर्यन्तम् उक्तम् अस्ति। जीवने आरोग्यदेहार्थं वृक्षाणाम् अतीव महत्त्वं वर्तते।

वृक्षारोपणस्य महिमा भविष्यपुराणे, स्कन्दपुराणे, रामायणे महाभारते च प्राप्यते । वैदिकधर्मे वृक्षारोपणं लौकिकधर्मरूपेण वर्तते। कार्यं विना वृक्षाणां शाखानां कर्तनं त्रोटनं च इत्यादीनि कार्याणि अस्माकं सनातनधर्मे निषिद्धानि सन्ति।

## उपनिषद्, नैतिकशिक्षा एवञ्च गुरुकुलम्

**उपनिषद्**-शब्दः उप-नि-उपसर्ग-पूर्वकात् सद् इति धातोः क्विप्-प्रत्यये कृते सति निष्पद्यते। अर्थात् सम्पूर्ण-अनर्थोत्पादकं सांसारिकक्रियाकलापम् उपनिषदा नाश्यते। उप समीपे ज्ञानप्राप्त्यर्थं निषीदति इति उपनिषद् (अर्थात् मुमुक्षुः शिष्यः स्वगुरोः सान्निध्ये ज्ञानप्राप्त्यर्थम् उपतिष्ठति इति।

**उपनिषदि प्राप्यमाणायाः शिक्षायाः कानिचन उदाहरणानि इत्थं सन्ति -**

**मा गृधः कस्यस्विद्धनम् ।**[1]

अन्यस्य कस्यचिदपि पुरुषस्य धने आसक्तिः न स्यात्।

**सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः।**[2]

**मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव।**

**यानि अनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि।**[3]

**विद्ययामृतमश्नुते**[4]

**उत्तिष्ठत जाग्रत वरान्निबोधत।**[5]

**सह नाववतु सह नौ भुनक्तु सहवीर्यंकरवावहै।**

**तेजस्विनावधीतमस्तु मा विद्विसावहै।। (कठोपनिषद् शान्तिपाठः)**

हे परमात्मन्! आवयोः गुरुशिष्ययोः युगपत् रक्षणं पालनं च करोतु, आवां युगपत् बलं प्राप्नुयाव। आवाभ्यां पठिता विद्या तेजेस्विनी स्यात्, आवयोः मध्येः द्वेषः न भवेत्।

---

[1] ईसावास्योपनिषद् मन्त्र - १

[2] तैत्तिरीयोपनिषद् अनुवाक् - ११

[3] तैत्तिरीयोपनिषद् अनुवाक् - ११

[4] ईसावास्योपनिषद् मन्त्र - ११

[5] कठोपनिषद् वल्ली - ३, मन्त्र - १४

**गुरुकुलस्य आहारः**

तपोमयं जीवनं निर्मातुं गुरुकुले अध्येतारः छात्राः, दुग्धं फलं शुद्धशाकाहारि भोजनं च कुर्वन्ति। मद्य-मांस-धूम्रपानादीनि आमिषजन्यानि वस्तूनि अत्यन्तं दृढतया निषेध्यन्ते। साधारणजीवनम् उच्चविचारः इति नियमः गुरुकुले विद्यमानाः आचार्याः शिष्याः च पूर्णरूपेण परिपालयन्ति। अस्माकं पूर्वजैः यत् '**आहारशुद्धौ सत्त्वशुद्धिः**' उक्तं तत् अधुना विज्ञानेनापि अनुसरणं कृतं वर्तते। तुलनात्मकरूपेण शाकाहारिमनुष्यः मांसाहारिमनुष्यस्य अपेक्षया अधिकः स्वस्थः दीर्घजीवी च भवति इति वैज्ञानिकानुसन्धानेन कथ्यते।

**अधुना पश्यामः शाकाहारिजनस्य विशेषताः**

- हृदये दयाभावः उत्पद्यते।
- मनसि विश्वशान्तेः भावना उत्पद्यते।
- हिंसां त्यक्त्वा अहिंसायाः सोपानं स्वीकरोति।
- स्वस्थ-आरोग्यकारणेन पूर्णायुः भवति।
- मानवीयजीवनमूल्यस्य संरक्षणं करोति।
- पर्यावरणीयसन्तुलने आत्मनः योगदानं करोति।
- प्राकृतिकसंसाधनस्य सुष्ठुतया उपभोगं करोति।
- नैतिकमूल्यानां तथा च देवपरम्परायाः अनुसरणं करोति।

एतानि उपरि चर्चितानि तत्त्वानि गुरुकुलस्य शिक्षाप्रणाल्याम् एव प्राप्यन्ते।

SAMVARDHINI
PEER REVIEWED MULTILINGUAL E-RESEARCH JOURNAL

(ISSN ONLINE: - 2583-7176)
https://samvardhini.in
https://samskritpromotion.in

# भारतीयज्ञानप्रणाली शोधकार्याणि च

लेखकः
डॉ.सत्यदेवः

SAMVARDHINI: - 20/12/2023
Volume - 5
Issue - 2
(ISSN ONLINE: - 2583-7176)
https://samvardhini.in



डॉ.सत्यदेवः
सहायकाचार्यः
शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविदद्यालयः,
वेदव्यासपरिसरः, बलाहरः, काङ्गडा,
हि.प्र. १७७१०८
satyad97@gmail.com

**भारतम्**

**उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।**
**वर्षं तद् भारतं नाम भारती यत्र सन्ततिः ॥ विष्णुपुराणम्**

**शोधसारः -**

ज्ञान-अध्यात्म-परापराविद्या-विज्ञान-कला-संस्कृति-संगीत-वाणिज्य-उद्योग-चिकित्सा-कृषि-प्रभृततिषु अनेकेषु विषयेषु विश्वस्मिन् विश्वे भारतं ख्यातनामा अस्ति । एतेषां विषयाणां हेतुना भारतीयज्ञानप्रणालीं प्रति विविधानाम् अनुसन्धानानाम् आधारेण सर्वसाधारणस्य अपि सामाजिकस्य वैश्विकस्तरे अन्ताराष्ट्रियपरिधौ आकर्षणं यथा भवेत् तथा अनुसन्धानक्षेत्राय दृष्टिनिक्षेपः इत्थं कर्तुं शक्येत । एवंभूतया अभिप्रेरणया अभिप्रेरितः एषः देवनागरीलिपिपरकं विवरणम् समुल्लिख्यते ।

## प्रस्तावना

आर्षज्ञानगर्भाः वेदराशयः। दीर्घकालिकानां संघर्षाणां परिणामेन परम्परायाम् अस्याम् आरोहावरोहः दरीदृश्यते । एतस्मिन् ज्ञानराशौ विधीयमानः श्रमः अनेन संघर्षेण कदाचित्कतया प्रभावाश्रयेण अपि संक्रमितः जातः । तथापि सेयं सनातनी ज्ञानपरम्परा अस्माकं या च यथाकालं जीवनसंघर्षैः विलुण्ठमानानाम् अस्माकं जीवधारिणां पुनर्पुनरपि विकसनाय सामर्थ्यशालिनी वर्तते । भारतीय-उच्चशिक्षायाः ज्ञाननिर्माणस्य उद्देश्यं प्रतिनित्यं समृद्धं स्यात् इति धिया शोधकार्याणि अभीष्टोद्देश्यानि आधारीकृत्य प्रवर्तनीयानि एव । इत्यतः शोधक्षेत्राणां चयनोद्देश्येन लेखनक्रमः अयं संकल्पितः अस्ति ।

**भारतीयज्ञानप्रणाली**

प्राचीन-जम्बूद्वीप-अजनाभखण्डे भारतवर्षे, आस्तिकीं परम्पराम् आश्रित्य सततपुष्कलाः अस्माकं दिव्यद्रष्टारः ऋषयः मुनयः च श्रुति-स्मृतिपरम्परया अस्मभ्यं सनातनं शास्त्रनिधिं प्रदत्तवन्तः।

**सनातनं नाम** – 'चिरपुरातनं नित्यनूतनं सनातनम्' इति संकल्पनया भारतीयशास्त्रपरम्परा इयं चिरपुरातनात् वैदिकसाहित्यात् नित्यनूतनं साहित्यं सृजन्ती प्रवर्तमाना अस्ति । प्रणालीनाम पद्धतिः, परम्परा, विधिः प्रथाः च इत्येवं संकल्पितं भवति । शोधकार्याणि इत्यनेन पदेन विस्तृताध्ययनं, सूक्ष्मेक्षिकया अध्ययनं, नूतनतथ्यान्वेषणं पुरातनतथ्यपरीक्षणं तथ्यान्वेषणं वा इत्येषा संगतिः जायते ।

अनुभव-अवलोकन-प्रयोग-कठोरविश्लेषणैः विकसिता ज्ञान-विज्ञान-जीवनदर्शनाधारिता अस्माकं भारतीयज्ञानप्रणाली अस्ति । वैदिकप्रणाली, गुरुकुलप्रणाली, सूत्रप्रणाली, ज्योतिषप्रणाली, दर्शनप्रणाली, साहित्यप्रणाली, भाष्यप्रणाली, टीकाप्रणाली मनोविज्ञानप्रणाली इत्यादीनि भारतीयज्ञानप्रणाल्याः अन्तरङ्गानिणि वर्तन्ते ।

भारतीयज्ञानप्रणाल्याः उत परम्परायाः आचार्यात् पादमाधत्ते इत्येतं यत्र गौरवभूतम् अस्ति तत्रैव अवलोकन-अधिगमन-अवबोधनपरकगवेषणादिभिः मनुष्यत्त्वाधानम् अपि प्राणभूतम् अस्ति । कौटुम्बिक-सामाजिक-मानवय-आरोग्य-प्राकृतिकैकात्मभावात्मकम् अनुसन्धानैः मनुष्यत्वविकासः अपि तत्त्वजातम् अस्ति । कौशल-प्रायोगिक-व्यावहारिककार्यपरकम् अनुसन्धानेन रचनात्मकतायाः संपादनसोपानानि सन्ति । समाजपोषित-आचार्यत्वं नाम अस्माकं भारतीयज्ञानप्रणाल्याः आधारेण निर्मितां कार्ययोजनां दृष्ट्वा छात्रशृङ्खला क्वचिदपि कृत्रिमतया संस्कारिता न भवति इत्थम् अद्वितीयचित्तपुष्पनं जायते भारतीयज्ञानप्रणाल्या भारतवर्षे अस्मिन् । विविधपाठ्यसहगामिक्रियाधारितम् अनुसन्धानेन छात्रेषु सामाजिकदृशा दायित्वबोधजागरणं सञ्जायते ।

वेदाः इत्यत्र मन्त्रभागः अत्रापि ऋग्वेदे एकविंशतिसंहिताः यत्र च संहिताद्वयम् उपलभ्यते, **यजुर्वेदे** १८१ संहिताः अत्र शुक्लयजुर्वेदस्य १५-०२ उपलब्धाः, कृष्णयजुर्वेदस्य ८६ -०४ उपलब्धाः, **सामवेदे** १००० संहिता – ०२ उपलब्धे स्तः। अथर्ववेदे आहत्य ०९ संहिताः – ०२ उपलब्धे स्तः । उपवेदेषु **अर्थवेदः** (ऋग्वेदस्य), **धनुर्वेदः** (यजुर्वेदस्य) **गान्धर्ववेदः** (सामवेदस्य) **आयुर्वेदः** (अथर्ववेदस्य) [आयुर्वेदस्य सुश्रुत-चरक-भेल-काश्यपसंहिताः] इत्येषः ज्ञानराशिः समुपलभ्यते ।

वेदाङ्गेषु **शिक्षासु** पाणिनी-व्यास-याज्ञवल्क्य-गौतमी-लोमशी-नारदी-माण्डुकीत्यादीन्यः शिक्षाः सन्ति । **कल्पेषु** गृह्यसूत्र-श्रोश्रौतसूत्रादयः, **व्याकरणे** पाणिनिव्याकरणं मानकत्वं संभजते । **निरुक्तप्रणाल्यां** यास्क-शाकपूणीप्रभृतीनि, **छन्देदःषु** पिङ्गलादीनि शास्त्राणि, **ज्योतिषे** भृगुसंहिता-बृहत्संहिता-सूर्यसिद्धान्त-सिद्धान्तशिरोमणि-इत्यादिग्रन्थाः सन्ति ।

वेदोपाङ्गेषु पुराणानि, न्यायः, मीमांसा, धर्मशास्त्राणि च महता परिमाणेन ज्ञानराशिं संधरन्ति । पुराण-उपपुराण-औपपुराण-तन्त्रशास्त्र-रामायण-महाभारतादीनि पुराणानि सन्ति । अत्र ब्रह्म-पद्म-विष्णु-शिव/वायु-लिङ्ग-गरुड-नारद-भागवत-अग्नि-स्कन्द-भविष्य-ब्रह्मवैवर्त-मार्कण्डेय-वामन-वराह-मत्स्य-कूर्म-ब्रह्माण्डानि इत्येतानि पुराणानि, आदि-नरसिंह-स्कन्द-शिवधर्म-दुर्वासा-नारदीय-कपिल-वामन-महेश्वर-औशनस-ब्रह्माण्ड-वरुण-कालिका-साम्ब-सौर-पाराशर-मारीच-भास्कराणि इत्येतानि उपपुराणानि, सनत्कुमार-बृहन्नारदीय-आदित्य-मानव-नन्दिकेश्वर-कौर्म-भागवत-वसिष्ठ-भार्गव-मुद्गल-कल्कि-देवी-महाभागवत-बृहद्धर्म-परानन्द-पशुपति-वाही-हरिवंशानि इत्येतानि औपपुराणानि, आचार-उपासना-ज्ञान-मन्त्र-

हठ-लययोग-भूतविद्या-गोपयोग-रसायनविद्याः च तन्त्रशास्त्रज्ञानराशिः, २४००००  श्लोकिरामायणम्, १८ पर्वयुतं १,००००० श्लोकमयं महाभारतं च अस्ति।

**न्यायज्ञानप्रणाल्यां** न्याय-वैशेषिक-सांख्य-योगादयः वर्तन्ते । गौतमप्रणीतः**१६** पदार्थिविद्याग्रन्थः न्यायः, कणादप्रणीतम् **वैशेषिकम्, कपिलप्रणीतं** प्रकृति-पुरुषवर्णनपरकं शास्त्रं सांख्यम् । पतञ्जलिप्रणीतं योगशास्त्रम्, **मीमांसाज्ञानप्रणाल्यां** पूर्वमीमांसा जैमिनिप्रणीतः वैदिककर्मकाण्डग्रन्थः, उत्तरमीमांसा वेदव्यासप्रणीतः जीवब्रह्माद्वैतताग्रन्थः इति।

**धर्मशास्त्रज्ञानप्रणाल्यां** धर्मसूत्राणि स्मृतयः च । गौतम-वसिष्ठ-आपस्तम्ब-बोधायनादीनि धर्मसूत्राणि, मनु-वृद्धमनु-आङ्गिरस-अत्रि-आपस्तम्ब-औशनस-कात्यायन-गोभिल-यम-बृहद्थम-लघुविष्णु-बृहद्विष्णु-नारद-शातातप-हारीत-वृद्धहारीत-लघ्वाश्वलायन-शङ्ख-याज्ञवल्क्य-व्यास-संवर्त-अत्रिसंहिता-दक्ष-देवल-बृहस्पति-पाराशर-बृहत्पाराशर-कश्यप-गौतम-वृद्धगौतम-वसिष्ठ-पुलस्त्य-योगिरुज्ञवल्क्य-व्याघ्रपाद-बोधायन-कपिल-विश्वामित्र-शाण्डिल्य-कण्व-दाल्भ्य-भारद्वाज-मार्कण्डेय-लौगाक्शीत्यादीन् अतिरिच्य अपि १७ ऋषिमुनीनां च स्मृतिशास्त्राणि सन्ति।

'आचार-संस्कार-वर्णधर्म-वर्णसंकरधर्म-स्त्रीत्वधर्म-पुरुषधर्म-राजधर्म-प्रायश्चिताः' इत्यादीन् अनेकान् अंशान् एतानि शास्त्राणि प्रभावयन्ति।

"यदि धर्मशास्त्राणि न स्युः तर्हि लोकव्यवहारस्य उच्छेदः जायेत"[1] इति। सामाजिके वैयक्तिके च आचारविचारे "विधिनिषेधाः" अपि इतः एव ज्ञायन्ते।

अतः चिरपुरातनी भारतीयज्ञानपरम्परा प्रतिनित्यम् अनुसन्धानक्षेत्रं नवोनवोन्मेषेण संपोषयन्ती अस्ति।

भारतीयज्ञानप्रणाल्यां खगोलज्ञानम्, भौतिकज्ञानम्, अभियान्त्रिकिज्ञानम्, रसायनज्ञानम्, धातुज्ञानम्, वैमानिकज्ञानम्, गणितज्ञानम्, अंकगणितज्ञानम्, ज्यामितिज्ञानम्, आयुर्वेदज्ञानम्, वनस्पतिज्ञानम्, कृषिज्ञानम्, सेचनज्ञानम्, पारिस्थितिकीज्ञानम्, प्रसाधनसामग्रीज्ञानम्, कलासंस्कृतिज्ञानम्, योगज्ञानम्, भूगोलज्ञानम्, वास्तुकलाज्ञानम्, युद्धज्ञानम्, स्वरज्ञानम्, राजनीतिज्ञानम्, वैज्ञानिकज्ञानम्, विरासतज्ञानम्, पाण्डुलिपिज्ञानम्, संगणकीयज्ञानम्, मस्तिकीयज्ञानम् इत्यादीनि गौरवास्पदानि ज्ञानशास्त्राणि भारतीयज्ञानपरम्पराम् आप्यायन्ति सन्ति।

भारतीयज्ञानप्रणाल्याः यदा सिंहावलोकनं क्रियते तदा अखण्डभारतस्य तेषां ज्ञानकेन्द्राणाम् उल्लेखस्य अनिवार्यता वरीवर्ति एव । तक्षशिला-नालन्दा-मिथिला-तेल्हारा-शारदा-वल्लभी-पुष्पगिरी-ओदन्तपुरी-विक्रमशिला-सोमपुर-विक्रमपुर-जगद्दला-नदियाप्रभृतयः विश्वविद्यालयाः सन्ति, यत्र सहस्रशः अध्येतारः विविधशास्त्रमयं ज्ञानम् आत्मसात्कुर्वन्तः भारतीयज्ञानप्रणालीं संपोषयन्तः भवन्ति स्म।

विश्वविद्यालयशिक्षायाः प्रमुखोद्देश्यं ज्ञाननिर्माणम् एव इति **ज्ञान-विज्ञान-विमुक्तये** विश्वविद्यालयानुदानायोगस्य ध्येयवाक्येन परिलक्ष्यते । ज्ञाननिर्माणं नाम नवनवोन्मेष इति । अतः भारतीयज्ञानपरम्परायां भारतीयानुसन्धानोन्मुखता एवं रीत्या उद्धृता -

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥**[1]

[1] . न्यायदर्शनभाष्यकार-वात्स्यायनः

कथनेन अभिप्रैतं यत् वाल्मीकेः रामायणम्, व्यासस्य महाभारत-पुराणादीनि, भरतस्य नाट्यशास्त्रम्, भामहस्य काव्यालङ्कारः, दण्डिनः काव्यादर्शः, उद्भटस्य काव्यालङ्कारसंग्रहः, राजशेखरस्य काव्यमीमांसा, वामनस्य काव्यलङ्कारसूत्रम्, आनन्दवर्धनस्य ध्वन्यालोकः, अभिनवगुप्तस्य ध्वन्यालोकलोचनम्, कुन्तकस्य वक्रोक्तिकाव्यजीवितम्, महिमभट्टस्य व्यक्तिविवेकः, क्षेमेन्द्रस्य औचित्यविचारचर्चा, भोजराजस्य सरस्वतीकण्ठाभरणम्, धनञ्जयस्य दशरूपकम्, मम्मटस्य काव्यप्रकाशः, हेमचन्द्रस्य काव्यानुशासनम्, जयदेवस्य चन्द्रालोकः, विश्वनाथस्य साहित्यदर्पणः, अप्पयदीक्षितस्य कुवलयानन्दः, पण्डितराजजगन्नाथस्य रसगङ्गाधरः, भरतमुनेः रससम्प्रदायः, भामह-उद्भट-रुद्रटादीनाम् अलङ्कार-रससम्प्रदाय, दण्डिनः वामनस्य च गुणरीतिसम्प्रदायः, कुन्तकस्य वक्रोक्तिसम्प्रदायः, आनन्दवर्धनस्य अभिनवगुप्तस्य च ध्वनिसम्प्रदायः, क्षेमेन्द्रस्य औचित्यसम्प्रदायः चेति अनेके संदर्भाः शोधकार्याय सन्ति यान् आधारीकृत्य शोधकार्यं सम्पादयितुं शक्यते।

भारतीयज्ञानप्रणाल्यां प्राचीनशिक्षापद्धतिः, स्वीयाः भारतीयप्राचीनग्रन्थाः, देदीप्यमानसंस्कृतिः, पुरातनसंस्काराः च शिक्षाजगति सर्वाङ्गीणविकासस्य आधारभूतानि तत्त्वानि सन्ति । एतेषु शिक्षासम्बद्धमूलतत्त्वानि अन्विष्य तदनुगुणं समाजदृष्टिपरिवर्तनम् ध्येयं शोधकार्याणां भवितुमर्हति । यतः सामान्यतः जगति मात्रं वर्षस्य योजना काचिद् निर्मातव्या तत्पूर्त्तये अन्नमुत्पादनीयम्, दशवर्षाणां योजना निर्मातव्या चेत् तत्पूर्त्तये वृक्षारोपणं विधेयं, शताब्दानां योजना निर्मातव्या चेत् तत्पूर्त्तये तु मानवनिर्माणं करणीयम् इत्येतादृशं कथानकं शिक्षाविचारकैः आभाष्यते। अतः शिक्षायाः अन्यतमम् उद्देश्यं तु सुनागरिकनिर्माणम् एव। अतः एवं भूतानां मानवमूल्यवतां विनूतनतथ्यानां गवेषणं शोधक्षेत्रे प्रधानतया आदरणीयम्।

भारतीयशिक्षाविचारकेषु 3-H (हस्त-मस्तिष्क-हृदयाधारिता शिक्षा) इति रूपात्मिकी शिक्षा अर्थात् उद्योगः एव शिक्षायाः केन्द्रं भवितव्यम् इति महात्मगान्धिनः कथनम्। प्रकृतिरेव महत्भूता शिक्षिका इति शान्तिनिकेतनसंस्थापकस्य श्रीरवीन्द्रनाथटैगोरस्य कथनम् । शिक्षायाः अर्थः पूर्णताप्राप्तिः इति अरविन्दस्य शिक्षादर्शनम् । शिक्षा बालकेषु निहितपूर्णतायाः विकासः इति स्वामिनः विवेकानन्दस्य शिक्षादर्शनम् अस्ति । आन्तरिकम् अर्थात् आत्मप्रेरितम् अनुशासनम् आवश्यकम् अस्ति, बाह्यानुशासनं तु मनसः मूर्खत्वं जनयति अपि च एतत् मनुष्ये अनुकरणप्रवृत्तिम् उत्पादयति इत्येतत् जे.कृष्णमूर्तेः कथनम्। अतः एतादृशानि आदर्शप्रेरणाभूतानि मूल्यानि अन्विष्य लोकोपकाराय प्रकटनीयानि।

प्रक्षेपकयन्त्र-स्मार्टबोर्डप्रभृतयः आधुनिकपरिप्रेक्ष्ये तकनीकेः प्रविधेः वा प्रयोगाः बाहुल्येन दरीदृश्यन्ते किं पुराकाले अपि एवम्प्रकारकाः प्रयोगाः भारतीयज्ञानप्रणाल्यां प्राप्यन्ते ?

संस्कृतजगति विविधशास्त्राधारितं 'कण्टेण्ट'निर्माणम्, शास्त्राधारितं 'कॉलरट्यून'सम्पादनम्, शास्त्राध्ययनाय विषयविशेषाणां श्रेणीकरणम्, भारतीयज्ञानप्रणाल्याः आधारेण महत्त्वपूर्णविषयाणाम् अन्तःशास्त्रीयपरिशीलनम्, भारतीयज्ञानप्रणाल्याः अवबोधनाय सोपानक्रमः, आधुनिकवस्तूनां (वाष्पस्थालिका-गीजर..प्रभृतीनाम्) भारतीयज्ञानप्रणाल्यां संबन्धसंकल्पनम्, प्राप्तव्यमर्थं लभते मनुष्यः, सहसा विदधीत न क्रियाम्, भवितव्यानां द्वाराणि भवन्ति सर्वत्र इत्यादीनां सूक्तीनाम् आजीविकासम्बन्धः, अर्जुन-दुर्योधनयोः रथसामुख्यदशायां परिणामः इत्येतादृशानां भारतीयज्ञानप्रणाल्याम् अन्तर्सम्बन्धकल्पनम्।

[1] .ईशावास्योपनिषद्-1.15

दश-विंशत्यधिकविषयाणां ज्ञातॄणाम् अभिनवगुप्ताचार्यसदृशानां व्यक्तित्त्वदृशा शोधदृष्टिः अर्थात् बहुबुद्धिमहत्त्वम् एतदनु सामर्थ्यसम्पादनाय जीवनशैलीक्रमः अपि भारतीयज्ञानप्रणाल्याः वैशिष्ट्यरूपेण अनुसन्धानक्षेत्रं भवितुम् अर्हति।

इदमिदानीम्, यदाकदाचित् कदाचित्कतया इत्येवं भूतानां प्रयोगविशिष्टानां संकलनं रचनाक्रमः च, सुररहितः कोलाहलः सुरसहितं संगीतम् इत्येतादृशानां गवेषणं भारतीयज्ञानप्रणाल्याधारितं भवेत् चेत् संस्कृतक्षेत्रे महत् संख्यावैशाल्यं समाजस्य युक्तं स्यात्। विशालं संख्यापरिमाणम् अपि भारतीयज्ञानप्रणालीं समाजे प्रभावकारिणीं कर्तुं शक्नोति। एतस्मिन् सूचनाप्रधानयुगे अन्तर्जालीय-व्यावसायिकधारायां प्रतिजनम् अपि समर्थकाः, अनुयायिनः (followers) च एतस्य क्रयमाणस्य पदार्थस्य कियन्तः सन्ति इति दृष्टिनिक्षेप एव क्रयणक्रियायाः अनुकूलतायाः आधारः भवति। कथनस्य आशयः एक-स्टार्, स्टार-द्वयम्, स्टार-त्रयं, स्टार-चतुष्टयं स्टार-पञ्चकं च इत्येतानि मानकानि परिशीलनाभावे अपि संबन्धितां संकल्पनां मानसपटले विनिर्मीय अस्मान् विश्वासीकरोति एवमेव भारतीयज्ञानप्रणालीम् आधारीकृत्य कृतैः शोधकार्यैः एतादृशः विश्वासः भारतीयज्ञानपरम्परां प्रति सम्पाद्यः इति दृष्टिः शोधकार्येषु सम्पादनीया।

भारतीयसंवैधानिकधारायां प्रशासनिकधारायां सामाजिकधारायां च शिक्षामन्त्रालय-गृहमन्त्रालय-वित्तमन्त्रालय-उद्योगक्षेत्र-दूरदर्शन-आकाशवाणी-सामाजिकसंस्थादीनां प्रतीकचिह्नानां (logos) भारतीयज्ञानप्रणालीम् आधारीकृत्य शोधकार्यं सम्पादयितुं शक्यते। येन तत्तत्क्षेत्रेषु कार्यरतानां जनानां मानसं भारतीयज्ञानप्रणाल्या परिचितः सन् आत्मविश्वस्तम् अपि भवेत्।

सामाजिकाह्वानेषु राष्ट्रविघटनम्, समाजविघटनम्, परिवारविघटनम् चेत्यादीनाम् अन्ताराष्ट्रियसमस्यानां समाधानदृशा भारतीयज्ञानप्रणाल्याः उपकारककत्वं सम्पादनीयं भवेत्। रचनात्मकता, प्रदर्शनकलादृशा च शोधदृष्टिः भवेत्।

इत्युद्देश्येन एव प्रायः ***ए.आई.सी.टी.ई-मुख्यालयस्थित-शिक्षामन्त्रालय-भारतीय-ज्ञान-परम्परा-प्रभागः*** *इति 2020 तमे वर्षे अक्टोबर्-मासे समुद्घाटितः स्यात्।* येन च

**मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम्** इति दृष्टिः शोधकर्मणि समागच्छेत्।

**सन्दर्भाः** -

- शुक्लः.2000- संस्करणम् ,विद्याभवनं वाराणसी-चौखम्बा ,प्रबन्धरत्नाकरः ,रमेशचन्द्रः.डॉ ,
- Science in samskrit, संस्कृतभारती2020 - पञ्चमं संस्करणम् ,नवदेहली ,
- सलूजा चान्दकिरणः ,शिक्षा ,संस्कृतसंवर्धनप्रतिष्ठानम्.2023-प्रथमसंस्करणम् ,नवदेहली ,
- शास्त्री.2017-देहली ,नई सड़क ,आचार्यः उदयवीरः वैशेषिकदर्शनम् ,
- शास्त्री.2018 ,नई सड़क देहली ,आचार्यः उदयवीरः योगदर्शनम् ,
- शास्त्री.2017,देहली ,नई सड़क ,विद्योदयभाष्यम् ,सांख्यदर्शनम्,आचार्यः उदयवीरः ,
- वेदालङ्कारः रघुवीरः.110007-चौखम्बाप्रकाशनम् ,वैदिकसाहित्येतिहासः ,
- शिवराजः आचार्यः.2014-संस्करणम् ,चौखम्बाविद्याभवनं वाराणसी ,पाणिनीयशिक्षा ,
- तिवारी शशी .2014-प्रथमसंस्करणम् ,दिल्ली ,प्रतिभाप्रकाशनं ,वेदव्याख्यापद्धतिः ,
- ऋषिः प्रोयास्कनि ,उमाशङ्करशर्मा.रुक्तम् 1961-वाराणसी ,चौखम्बाविद्याभवनम् ,
- अष्टाविंशत्युपनिषत्संग्रहः 1985-वाराणसी ,व्यासप्रकाशनम् ,

